॥ श्रीकामाक्षिस्तोत्रम् १ ॥

कारणपरचिद्रूपा काञ्चीपुरसीम्नि कामपीठगता ।
काचन विहरति करुणा काश्मीरस्तबककोमलाङ्गलता ॥ १॥ मू.प. आ. १

कञ्चन काञ्चीनिलयं करधृतकोदण्डबाणसृणिपाशम् ।
कठिनस्तनभरनम्रं कैवल्यानन्दकन्दमवलम्बे ॥ २॥ मू.प. आ. २

ऐश्वर्यमिन्दुमौलेरैकात्म्यप्रकृति काञ्चिमध्यगतम् ।
ऐन्दवकिशोरशेखरमैदम्पर्यं चकास्ति निगमानाम् ॥ ३॥ मू.प. आ. ७

लीये पुरहरजाये माये तव तरुणपल्लवच्छाये ।
चरणे चन्द्राभरणे काञ्चीशरणे नतार्तिसंहरणे ॥ ४॥ मू.प. आ. ७२

कामपरिपन्थिकामिनि कामेश्वरि कामपीठमध्यगते ।
कामदुघा भव कमले कामकले कामकोटि कामाक्षि ॥ ५॥ मू.प. आ. ४९

समरविजयकोटी साधकानन्दधाटी
मृदुगुणपरिपेटी मुख्यकादम्बवाटी । var मृदुगुणगणपेटी
मुनिनुतपरिपाटी मोहिताजाण्डकोटी
परमशिववधूटी पातु मां कामकोटी ॥ ६॥ मू.प. स्तु. १००

जय जय जगदम्ब शिवे जय जय कामाक्षि जय जयाद्रिसुते ।
जय जय महेशदयिते जय जय चिद्गगनकौमुदीधारे ॥ ७॥ मू.प. आ. १००

॥ श्रीकामाक्षीस्तोत्रम् २ ॥

काञ्चीनूपुररत्नकङ्कणलसत्केयूरहारोज्ज्वलां
काश्मीरारुणकञ्चुकाञ्चितकुचां कस्तूरिकाचर्चिताम् ।
कल्हाराञ्चितकल्पकोज्ज्वलमुखीं कारुण्यकल्लोलिनीं
कामाक्षीं कलयामि कल्पलतिकां काञ्चीपुरीदेवताम् ॥ १॥

कामारातिमनःप्रियां कमलभूसेव्यां रमाराधितां
कन्दर्पाधिकदर्पदानविलसत्सौन्दर्यदीपाङ्कुराम् ।
कीरालापविनोदिनीं भगवतीं काम्यप्रदानव्रतां
कामाक्षीं कलयामि कल्पलतिकां काञ्चीपुरीदेवताम् ॥ २॥

कादम्बप्रमदां विलासगमनां कल्याणकाञ्चीरवां
कल्याणाचलपादपद्मयुगलां कान्त्या स्फुरन्तीं शुभाम् ।
कल्याणाचलकार्मुकप्रियतमां कादम्बमालाश्रियं
कामाक्षीं कलयामि कल्पलतिकां काञ्चीपुरीदेवताम् ॥ ३॥

गन्धर्वामरसिद्धचारणवधूध्येयां पताकाञ्चितां
गौरीं कुङ्कुमपङ्कपङ्कितकुचद्वन्द्वाभिरामां शुभाम् ।
गम्भीरस्मितविभ्रमाङ्कितमुखीं गङ्गाधरालिङ्गितां
कामाक्षीं कलयामि कल्पलतिकां काञ्चीपुरीदेवताम् ॥ ४॥

विष्णुब्रह्ममुखामरेन्द्रविलसत्कोटीरपीठस्थलां
लाक्षारञ्जितपादपद्मयुगलां राकेन्दुबिम्बाननाम् ।
वेदान्तागमवेद्यचिन्त्यचरितां विद्वज्जनैरावृतां
कामाक्षीं कलयामि कल्पलतिकां काञ्चीपुरीदेवताम् ॥ ५॥

माकन्दद्रुममूलदेशमहिते माणिक्यसिंहासने
दिव्यां दीपितहेमकान्तिनिवहां वस्त्रावृतां तां शुभाम् ।
दिव्याकल्पितदिव्यदेहभरितां दृष्टिप्रमोदार्पितां
कामाक्षीं कलयामि कल्पलतिकां काञ्चीपुरीदेवताम् ॥ ६॥

आधारादिसमस्तचक्रनिलयामाद्यन्तशून्यामुमां
आकाशादिसमस्तभूतनिवहाकारामशेषात्मिकाम् ।
योगीन्द्रैरपि योगिनीशतगणैराराधितामम्बिकां
कामाक्षीं कलयामि कल्पलतिकां काञ्चीपुरीदेवताम् ॥ ७॥

ह्रीङ्कारप्रणवात्मिकां प्रणमतां श्रीविद्यविद्यामयीं
ऐं क्लीं सौं रुचि मन्त्रमूर्तिनिवहाकारामशेषात्मिकाम् ।

ब्रह्मानन्दरसानुभूतिमहितां ब्रह्मप्रियंवादिनीं
कामाक्षीं कलयामि कल्पलतिकां काञ्चीपुरीदेवताम् ॥ ८॥

सिद्धानन्दजनस्य चिन्मयसुखाकारां महायोगिनीं
मायाविश्वविमोहिनीं मधुमतीं ध्यायेत् शुभां ब्राह्मणीम् ।
ध्येयां किन्नरसिद्धचारणवधू ध्येयां सदा योगिभिः
कामाक्षीं कलयामि कल्पलतिकां काञ्चीपुरीदेवताम् ॥ ९॥

कामारिकामां कमलासनस्थां
काम्यप्रदां कङ्कणचूडहस्तां ।
काञ्चीनिवासां कनकप्रभासां
कामाक्षिदेवीं कलयामि चित्ते ॥ १०॥

इति श्री कामाक्षीस्तोत्रं सम्पूर्णम् ।

॥ श्रीकामाक्षीस्तोत्रम् ३ ॥
कल्पानोकहपुष्पजालविलसन्नीलालकां मातृकां
कान्तां कञ्जदलेक्षणां कलिमलप्रध्वंसिनीं कालिकाम् ।
काञ्चीनूपुरहारदामसुभगां काञ्चीपुरीनायिकां
कामाक्षीं करिकुम्भसन्निभकुचां वन्दे महेशप्रियाम् ॥ १॥

काशाभांशुकभासुरां प्रविलसत्कोशातकीसन्निभां
चन्द्रार्कानललोचनां सुरुचिरालङ्कारभूषोज्ज्वलाम् ।
ब्रह्मश्रीपतिवासवादिमुनिभिः संसेविताङ्घ्रिद्वयां
कामाक्षीं गजराजमन्दगमनां वन्दे महेशप्रियाम् ॥ २॥

ऐं क्लीं सौरिति यां वदन्ति मुनयस्तत्त्वार्थरूपां परां
वाचां आदिमकारणं हृदि सदा ध्यायन्ति यां योगिनः ।
बालां फालविलोचनां नवजपावर्णां सुषुम्नाश्रितां
कामाक्षीं कलितावतंससुभगां वन्दे महेशप्रियाम् ॥ ३॥

यत्पादाम्बुजरेणुलेशं अनिशं लब्ध्वा विधत्ते विधिर्-
विश्वं तत् परिपाति विष्णुरखिलं यस्याः प्रसादाच्चिरम् ।
रुद्रः संहरति क्षणात् तद् अखिलं यन्मायया मोहितः
कामाक्षीं अतिचित्रचारुचरितां वन्दे महेशप्रियाम् ॥ ४॥

सूक्ष्मात् सूक्ष्मतरां सुलक्षिततनुं क्षान्ताक्षरैर्लक्षितां
वीक्षाशिक्षितराक्षसां त्रिभुवनक्षेमङ्करीं अक्षयाम् ।
साक्षाल्लक्षणलक्षिताक्षरमयीं दाक्षायणीं सक्षिणीं var साक्षिणीं
कामाक्षीं शुभलक्षणैः सुललितां वन्दे महेशप्रियाम् ॥ ५॥

ओङ्काराङ्गणदीपिकां उपनिषत्प्रासादपारावतीम्
आम्नायाम्बुधिचन्द्रिकां अधतमःप्रध्वंसहंसप्रभाम् ।
काञ्चीपट्टणपञ्जराऽऽन्तरशुकीं कारुण्यकल्लोलिनीं
कामाक्षीं शिवकामराजमहिषीं वन्दे महेशप्रियाम् ॥ ६॥

ह्रीङ्कारात्मकवर्णमात्रपठनाद् ऐन्द्रीं श्रियं तन्वतीं
चिन्मात्रां भुवनेश्वरीं अनुदिनं भिक्षाप्रदानक्षमाम् ।
विश्वाघौघनिवारिणीं विमलिनीं विश्वम्भरां मातृकां
कामाक्षीं परिपूर्णचन्द्रवदनां वन्दे महेशप्रियाम् ॥ ७॥

वाग्देवीति च यां वदन्ति मुनयः क्षीराब्धिकन्येति च
क्षोणीभृत्तनयेति च श्रुतिगिरो यां आमनन्ति स्फुटम् ।

एकानेकफलप्रदां बहुविधाऽऽकारास्तनूस्तन्वतीं
कामाक्षीं सकलार्तिभञ्जनपरां वन्दे महेशप्रियाम् ॥ ८॥

मायामादिम्कारणं त्रिजगतां आराधिताङ्घ्रिद्वयाम्
आनन्दामृतवारिराशिनिलयां विद्यां विपश्चिद्धियाम् ।
मायामानुषरूपिणीं मणिलसन्मध्यां महामातृकां
कामाक्षीं करिराजमन्दगमनां वन्दे महेशप्रियाम् ॥ ९॥

कान्ता कामदुघा करीन्द्रगमना कामारिवामाङ्कगा var कामदुहा
कल्याणी कलितावतारसुभगा कस्तूरिकाचर्चिता
कम्पातीररसालमूलनिलया कारुण्यकल्लोलिनी
कल्याणानि करोतु मे भगवती काञ्चीपुरीदेवता ॥ १०॥

इति श्रीमद् आदिशङ्कराचर्यविरचितं श्री कामाक्षीस्तोत्रं सम्पूर्णम् ।